श्रीपरशुरामकृतं दुर्गास्तोत्रम्
परशुराम उवाच -
श्रीकृष्णस्य च गोलोके परिपूर्णतमस्य च ।
आविर्भूता विग्रहतः पुरा सृष्ट्युन्मुखस्य च ॥ १॥

सूर्यकोटिप्रभायुक्ता वस्त्रालङ्कारभूषिता ।
वह्निशुद्धांशुकाधाना सुस्मिता सुमनोहरा ॥ २॥

नवयौवनसम्पन्ना सिन्दूरारुण्यशोभिता । var सिन्दूरबिन्दुशोभिता ।
ललितं कबरीभारं मालतीमाल्यमण्डितं ॥ ३॥

अहोऽनिर्वचनीया त्वं चरुमूर्तिं च बिभ्रती ।
मोक्षप्रदा मुमुक्षूणां महाविष्णोर्विधिः स्वयम् ॥ ४॥

मुमोह क्षणमात्रेण दृष्ट्वा त्वां सर्वमोहिनीम् ।
बालैस्सम्भूय सहसा सस्मिता धाविता पुरा ॥ ५॥

सद्भिः ख्याता तेन राधा मूलप्रकृतिरीश्वरी ।
कृष्णस्त्वां सहसाहूय वीर्याधानं चकार ह ॥ ६॥ var कृष्णस्तां सहसा भीतो

ततो डिम्भं महज्जज्ञे ततो जातो महाविराट् ।
यस्यैव लोमकूपेषु ब्रह्माण्डान्याखिलानि च ॥ ७॥

राधारतिक्रमेणैव तन्निश्श्वासो बभूव ह । var तच्छृङ्गारक्रमेणैव
स निःश्वासो महावायुः स विराड् विश्वधारकः ॥ ८॥

भयधर्मजलेनैव पुप्लुवे विश्वगोलकम् । var तव घर्म
स विराड् विश्वनिलयो जलराशिर्बभूव ह ॥ ९॥

ततस्त्वं पञ्चधाभूय पञ्चमूर्तीश्च बिभ्रती ।
प्राणाधिष्ठातृमूर्तिर्या कृष्णस्य परमात्मनः ।
कृष्णप्राणाधिकां राधां तां वदन्ति पुराविदः ॥ १०॥

वेदाधिष्ठातृमूर्तिर्या वेदाशास्त्रप्रसूरपि ।
तां सावित्रीं शुद्धरूपां प्रवदन्ति मनीषिणः ॥ ११॥

ऐश्वर्याधिष्ठातृमूर्तिः शान्तिस्त्वं शान्तरूपिणी । var शान्तिश्च
लक्ष्मीं वदन्ति सन्तस्तां शुद्धां सत्त्वस्वरूपिणीम् ॥ १२॥

रागाधिष्ठातृदेवी या शुक्लमूर्तिः सतां प्रसूः ।
सरस्वतीं तां शास्त्रज्ञां शास्त्रज्ञाः प्रवदन्त्यहो ॥ १३॥

बुद्धिर्विद्यासर्वशक्तेर्या मूर्तिरधिदेवता ।
सर्वमङ्गलमङ्गल्या सर्वमङ्गलरूपिणी ॥ १४॥

सर्वमङ्गलबीजस्य शिवस्य निलयेऽधुना ॥ १५॥

शिवे शिवास्वरूपा त्वं लक्ष्मीर्नारायणान्तिके ।
सरस्वती च सावित्री वेदसूर्ब्रह्मणः प्रिया ॥ १६॥

राधा रासेश्वरस्यैव परिपूर्णतमस्य च ।
परमानन्दरूपस्य परमानन्दरूपिणी ॥ १७॥

त्वत्कलांशांशकलया देवानामपि योषितः ॥ १८॥

त्वं विद्या योषितः सर्वास्सर्वेषां बीजरूपिणी । var सर्वास्त्वं सर्वबीजरूपिणी
छाया सूर्यस्य चन्द्रस्य रोहिणी सर्वमोहिनी ॥ १९॥

शची शक्रस्य कामस्य कामिनी रतिरीश्वरी ।
वरुणानी जलेशस्य वायोः स्त्री प्राणवल्लभा ॥ २०॥

वह्नेः प्रिया हि स्वाहा च कुबेरस्य च सुन्दरी ।
यमस्य तु सुशीला च नैरृतस्य च कैटभी ॥ २१॥

ऐशानी स्याच्छिशकला शतरूपा मनोः प्रिया । var ईशानस्य शशिकला
देवहूतिः कर्दमस्य वसिष्ठस्याप्यरुन्धती ॥ २२॥

लोपामुद्राऽप्यगस्त्यस्य देवमाताऽदितिस्तथा ।
अहल्या गौतमस्यापि सर्वाधारा वसुन्धरा ॥ २३॥

गङ्गा च तुलसी चापि पृथिव्यां याः सरिद्वराः ।
एताः सर्वाश्च या ह्यन्याः सर्वास्त्वत्कलयाम्बिके ॥ २४॥

गृहलक्ष्मीर्गृहे नृणां राजलक्ष्मीश्च राजसु ।
तपस्विनां तपस्या त्वं गायत्री ब्राह्मणस्य च ॥ २५॥

सतां सत्त्वस्वरूपा त्वमसतां कलहाङ्कुरा ।
ज्योतीरूपा निर्गुणस्य शक्तिस्त्वं सगुणस्य च ॥ २६॥

सूर्ये प्रभास्वरूपा त्वं दाहिका च हुताशने ।
जले शैत्यस्वरूपा च शोभारूपा निशाकरे ॥ २७॥

त्वं भूमौ गन्धरूपा च आकाशे शब्दरूपिणी ।
क्षुत्पिपासादयस्त्वं च जीविनां सर्वशक्तयः ॥ २८॥

सर्वबीजस्वरूपा त्वं संसारे साररूपिणी ।
स्मृतिर्मेधा च बुद्धिर्वा ज्ञानशक्तिर्विपश्चिताम् ॥ २९॥

कृष्णेन विद्या या दत्ता सर्वज्ञानप्रसूः शुभा ।
शूलिने कृपया सा त्वं यतो मृत्युञ्जयः शिवः ॥ ३०॥

सृष्टिपालनसंहारशक्तयस्त्रिविधाश्च याः ।
ब्रह्मविष्णुमहेशानां सा त्वमेव नमोऽस्तु ते ॥ ३१॥

मधुकैटभभीत्या च त्रस्तो धाता प्रकम्पितः ।
स्तुत्वा मुक्तश्च यां देवीं तां मूर्ध्ना प्रणमाम्यहम् ॥ ३२॥ var स्तुत्वा मुमोच

मधुकैटभयोर्युद्धे त्राताऽसौ विष्णुरीश्वरीम् ।
बभूव शक्तिमान्स्तुत्वा तां दुर्गां प्रणमाम्यहम् ॥ ३३॥

त्रिपुरस्य महायुद्धे सरथे पतिते शिवे ।
यां तुष्टुवुः सुराः सर्वे तां दुर्गां प्रणमाम्यहम् ॥ ३४॥

विष्णुना वृषरूपेण स्वयं शम्भुः समुत्थितः ।
जघान त्रिपुरं स्तुत्वा तां दुर्गां प्रणमाम्यहम् ॥ ३५॥

यदाज्ञया वाति वातः सूर्यस्तपति सन्ततम् ।
वर्षतीन्द्रो दहत्यग्निस्तां दुर्गां प्रणमाम्यहम् ॥ ३६॥

यदाज्ञया हि कालश्च शश्वद्भ्रमति वेगतः ।
मृत्युश्चरति जन्त्वोघे तां दुर्गां प्रणमाम्यहम् ॥ ३७॥ var जन्तूनां

स्रष्टा सृजति सृष्टिं च पाता पाति यदाज्ञया ।
संहर्ता संहरेत्काले तां दुर्गां प्रणमाम्यहम् ॥ ३८॥

ज्योतिःस्वरूपो भगवाञ्छ्रीकृष्णो निर्गुणः स्वयम् ।
यया विना न शक्तश्च सृष्टिं कर्तुं नमामि ताम् ॥ ३९॥

रक्ष रक्ष जगन्मातरपराधं क्षमस्व ते । var क्षमस्व मे
शिशूनामपराधेन कुतो माता हि कुप्यति ॥ ४०॥

इत्युक्त्वा पर्शुरामश्च प्रणम्य तां रुरोद ह । var परशुरामश्चेति नत्वा तां
तुष्टा दुर्गा सम्भ्रमेण चाभयं च वरं ददौ ॥ ४१॥

अमरो भव हे पुत्र वत्स सुस्थिरतां व्रज ।
शर्वप्रसादात्सर्वत्र जयोऽस्तु तव सन्ततम् ॥ ४२॥ var सर्वप्रसादात्

सर्वान्तरात्मा भगवांस्तुष्टोऽस्तु सन्ततं हरिः । var तुष्टस्यात्सन्ततं
भक्तिर्भवतु ते कृष्णे शिवदे च शिवे गुरौ ॥ ४३॥

इष्टदेवे गुरौ यस्य भक्तिर्भवति शाश्वती ।
तं हन्तुं न हि शक्ताश्च रुष्टाश्च सर्वदेवताः ॥ ४४॥ var शक्ता वा तुष्टा वा

श्रीकृष्णस्य च भक्तस्त्वं शिष्यो हि शङ्करस्य च । शिष्यो वै
गुरुपत्नीं स्तौषि यस्मात्कस्त्वां हन्तुमिहेश्वरः ॥ ४५॥

अहो न कृष्णभक्तानामशुभं विद्यते क्वचित् ।
अन्यदेवेषु ये भक्ता न भक्ता वा निरङ्कशाः ॥ ४६॥

चन्द्रमा बलवांस्तुष्टो येषां भाग्यवतां भृगो ।
तेषां तारागणा रुष्टाः किं कुर्वन्ति च दुर्बलाः ॥ ४७॥

यस्य तुष्टः सभायां चेन्नरदेवो महान्सुखी । var यस्मै तुष्टः पालयति
तस्य किं वा करिष्यन्ति रुष्टा भृत्याश्च दुर्बलाः ॥ ४८॥

इत्युक्त्वा पार्वती तुष्टा दत्त्वा रामं शुभाशिषम् । var रामाय चाशिषम्
जगामान्तःपुरं तूर्णं हरिशब्दो बभूव ह ॥ ४९॥

स्तोत्रं वै काण्वशाखोक्तं पूजाकाले च यः पठेत् ।
यात्राकाले च प्रातर्वा वाञ्छितार्थं लभेद्ध्रुवम् ॥ ५०॥

पुत्रार्थी लभते पुत्रं कन्यार्थी कन्यकां लभेत् ।

विद्यार्थी लभते विद्यां प्रजार्थी चाप्नुयात् प्रजाम् ।
भ्रष्टराज्यो लभेद्राज्यं नष्टवित्तो धनं लभेत् ॥ ५१॥

यस्य रुष्टो गुरुर्देवो राजा वा बान्धवोऽथवा ।
तस्य तुष्टश्च वरदः स्तोत्रराजप्रसादतः ॥ ५२॥

दस्युग्रस्तोऽहिग्रस्तश्च शत्रुग्रस्तो भयानकः । var दस्युग्रस्तः फणिग्रस्तश्शत्रुग्रस्तो
व्याधिग्रस्तो भवेन्मुक्तः स्तोत्रस्मरणमात्रतः ॥ ५३॥

राजद्वारे श्मशाने च कारागारे च बन्धने ।
जलराशौ निमग्नश्च मुक्तस्तत्स्मृतिमात्रतः ॥ ५४॥

स्वामिभेदे पुत्रभेदे मित्रभेदे च दारुणे ।
स्तोत्रस्मरणमात्रेण वाञ्छितार्थं लभेद्ध्रुवम् ॥ ५५॥

कृत्वा हविष्यं वर्षं च स्तोत्रराजं शृणोति या ।
भक्त्या दुर्गां च सम्पूज्य महावन्ध्या प्रसूयते ॥ ५६॥

लभते सा दिव्यपुत्रं ज्ञानिनं चिरजीविनम् ।
असौभाग्या च सौभाग्यं षण्मासश्रवणाल्लभेत् ॥ ५७॥

नवमासं काकवन्ध्या मृतवत्सा च भक्तितः ।
स्तोत्रराजं या शृणोति सा पुत्रं लभते ध्रुवम् ॥ ५८॥

कन्यामाता पुत्रहीना पञ्चमासं शृणोति या ।
घटे सम्पूज्य दुर्गां च सा पुत्रं लभते ध्रुवम् ॥ ५९॥

इति श्रीब्रह्मवैवर्ते नारदनारायणसंवादे परशुरामकृतं
दुर्गास्तोत्रं सम्पूर्णम् ।
(गणपतिखण्ड ४५. १८-७८)